# Yogāsutra Vritti

NAMED

## YOGA SUDHAKARA

BY

## Sri Sadasivendra Sarasvati

*Author of Brahmasutra Vritti, Atmavidyavilasa etc.*



**SRIRANGAM:**

SRI VANI VILAS PRESS.

1911.

॥ ओम् ॥

योगसुधाकरो

नाम

# ॥ योगसूत्रवृत्तिः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीपरम-

शिवेन्द्रसरस्वतीपादाब्जसेवापरायण

**श्रीसदाशिवेन्द्रसरस्वत्या**

विरचिता ।



श्रीरङ्गनगरे

**श्रीवाणीविलासमुद्रायन्त्रालये**

संमुद्रिता ।

१९१२.

# PREFACE.

---

IT affords me peculiar pleasure to be able to bring one after another the works of the great Mahatma, Sri Sadasivendra Sarasvati. Till recently his works were known to the public by name only and it was a proud moment for me when I, in obedience to the command of His Holiness Sri Jagadguru of Sringeri, published for the first time Sri Sadasivendra's beautiful commentary on the Brahma Sutras known as Brahmatattvaprakasika. Since then have come out in quick succession his Siddhanta Kalpavalli (a masterly epitome in verse of the famous work Siddhantalesasangraha of Appaya Dikshita) with his own commentary called Kesaravalli, Atmavidyavilasa containing not only the well known Sixty-two slokas in Arya metre but also forty-three slokas in various large metres and his sweet and melodious songs or kirtanas full of Advaitic wisdom. All these masterpieces of this master-mind are very much appreciated by all scholars throught India and it is with feelings of genuine pleasure that I now publish this rarest of all his works viz., the commentary on the Yogasutras of Patanjali named as Yogasudhakara. Through the exertions of Pandit S. Subramanya Sastrigal of Tanjore, I obtained

only one (yet neat and accurate) manuscript and my eternal thanks are due to him for thus enabling me to publish this most valuable work. A commentary on the Yogasutras by the greatest Raja Yogin Southern India has ever produced is sure to be eagerly welcomed and highly appreciated by the discerning Public and it is a source of gratification that the Sri Vani Vilas Press has the privilege of making it known to the world.

A life-sketch of the author in English was prefixed to the Brahmasutravritti and this was specially rendered into Sanskrit at my request to be prefixed to this work by Mr. R. Krishnamachariar M. A., Vidyanidhi, whom I hereby heartily thank for his deep interest in all that concerns the welfare of this Press.

*T. K. Balasubrahmanyam.*


॥ विषयाः ॥





॥ श्रीः ॥

# ॥ श्रीसदाशिवेन्द्रसरस्वती ॥

---*---

चराचरगुरोराज्ञया सर्वसहायामस्यामखिलजनमनस्तमोनिवारणायावतरन्ति मर्त्यरूपेण तदा तदा केचन पावनचरित्राः परिशुद्धचर्याः पङ्क्तिपावनाः परमेश्वरांशभूताः परावरतत्त्वज्ञाः परमगुरुवर्याः पुण्यजन्मानः पुरुषधौरेयाः । तादृशेषु प्रथमगणनीयो राजयोगनिष्णातः निखिलदिगन्तविश्रान्तयशाः कवेरकन्यातीरविहारकुतुकी 'सदाशिवेन्द्रसरस्वती' इति सुप्रसिद्धनामा योगिवर्यः सार्धशतहायनेभ्यः पूर्वं चोलमण्डलमात्मनो जन्मना अलमकार्षीदिति श्रूयते । तस्य चावासभूमिः करूर्नामको जनपद इति चावगम्यते । को वा न जानाति विशुद्धचरितस्यास्य योगीन्द्रस्यात्यद्भुतमपदानमार्यजनैर्गीयमानमनुदिवसमनुसंधीयमानं स्तुतिरूपेण विशदमनुवर्णितं श्रीशिवाभिनवनृसिंहभारतीस्वामिभिः श्रीमच्छृङ्गगिरिपीठमलंकुर्वद्भिरास्तिकजनानुग्रहनिरतैः ?

योगीन्द्रा हीमे शैशव एव समधिगतनिखिलविद्यावि-

लासा: गुरुभिरभिनन्दनीयविशदावभासविज्ञाना व्यराजन्त । निरन्तरनिबिडनारिकेलकदलीपनसाम्रक्रमुकादिद्रुमनिवहमण्डिते कवेरकन्यापरिसरोपान्तविराजमाने तिरुविशनल्लूर्ग्रामे विद्याग्रहणाय गुरूपसदनमकार्षुरेते स्मृतिचोदितेन वर्त्मना । तदा ह्यसौ ग्रामः विद्वद्वृन्दैर्विख्यातवैभवैर्माणवकैर्विद्याग्रहणपटुभिश्च आपूर्ण आसीदिति ज्ञायते ॥

श्रीमतोऽस्य सदाशिवस्य प्रथमे वयसि वर्तमानस्य सहाध्यायिषु माणवकेष्वेकतमः सुप्रसिद्धनामा रामभद्रदीक्षितः— यो हि जानकीपरिणयं नाम रूपकमनितरसाधारणेन मतिवैशद्येन निर्माय दाक्षिणात्यकवीनां नाटकसंविधानकरणनैपुण्याभावरूपमयशः प्रमार्ज्य शाश्वतं यशःकायमार्जितवान् । श्रीवेङ्कटेशनामा किलान्यो बालः— यो ह्याशैशवात्प्रकटितदिव्यानुभावः आख्याषष्टिदयाशतकादिग्रन्थान्विरचय्याध्यात्मतत्त्वमनुपमया वाग्वैखर्या विवृण्वन् अतिपावनेनात्मनः चरितेन धर्मतत्त्वमतिगहनमपि सम्यगुपदिशन् महतीं प्रसिद्धिं लेभे; यश्चाद्यापि 'अय्यावाल्' इत्यखिलैरास्तिकैः सभक्तिगौरवं साञ्जलिबन्धं च परमाचार्येषु प्रधानतया परिगण्यते । वैदुष्येण प्रज्ञापाटवेन चैतयोरन्यूनः गोपालकृष्णशास्त्र्यपरो वटुः— यो हि 'महाभाष्यं वा पठनीयम् ;

महाराज्यं वा पालनीयम्' इत्यभियुक्तोक्तिं हृदये कुर्वन् महाभाष्यपठनरसमनवरतमास्वदमानः भाष्यरत्नस्यास्य रमणीयां शाब्दिकहृदयंगमां कामपि व्याख्यामारचयत्; ब्रह्मनिष्ठस्यास्य वैदिकानुष्ठानेन ब्रह्मवर्चसेन शमेन दान्त्या चावर्जितस्वान्तः तोण्डमान्कुलतिलको नवसालजनपदाधीशः तच्छिष्यकोटिष्वात्मनः प्रवेशं साम्राज्यलाभादप्यधिकं मेने ॥

चत्वारोऽपीमे माणवका ईश्वरांशभूता अध्यात्मतत्त्वोपदेशेन जगदुज्जीवनाय कृतावताराः क्रमेण कृष्णेतरपक्षशशलाञ्छना इवैधमाना व्यराजन्त । यदीयसूक्तिसुधारसनिमग्नाः शिष्यपरंपराः दुर्विज्ञेयमप्यध्यात्मतत्त्वरहस्यमनायासेनावगत्य दूरीकृतदेहाभिमानाः भस्मीकृतेषणात्रितयाः परित्यक्तसांसारिकदुःखाः तृणीकृतपुरंदराः विधूतपुण्यपाप्मानः लीयन्ते केवलानन्दे नादमये ब्रह्मणि ॥

कथानायकोऽसौ सदाशिवः बाल एव न्यायशास्त्रे निरुपमं पाण्डित्यमावहन् वादाहवेष्वाचार्यानप्याकुलीचकार । प्रथमवयस्येव कृतदारपरिग्रहोऽसौ विद्याग्रहणव्यापृतः क्रमेण शैशवमतिचक्राम । शुश्राव च गुरुकुले वसन् कदाचिदात्मनः प्रेयस्या ऋतुप्रादुर्भावोदन्तं दूतमुखात् । आहूतश्च तैः जननीनियोगं मानयन् गुरुभिरनुज्ञातः अविलम्बेन प्रस्थाय

ऋतुस्नानदिवसे ब्राह्मणसंतर्पणादिषु व्यापृतया जनन्या सादरमभिनन्द्यमानागमनो गृहानयासीत् । उत्सवकोलाहलहर्षनिर्भरेष्वभ्यन्तरजनेषु श‍ृङ्गारगीतिमुखरेष्वङ्गनासमाजेषु आशीर्वचनमेदुरेषु गृहाङ्गणेषु अभ्यवहारसमयमतिक्रान्तमाकलयतः क्षुधा तृषा च क्लिश्नतोऽस्य सदाशिवस्यैवमुदभून्मनसि 'पाणिग्रहणं नामेदमनन्तानां दुःखानां द्वारमित्यामनन्ति किल ब्रह्मनिष्ठाः । किञ्चिदपीदमनशनदुःखं मे भाविनीं दुःखपरंपरां सूचयतीव' इति ॥

एवंविधा चिन्ता तमहर्निशमुद्वेजयन्ती गार्हस्थ्ये द्वेषबुद्धिं द्रढयन्ती विरक्तिमतिमहतीमजीजनत् । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति न्यायेन सद्य एव परित्यक्तगृहाभिमानः उदवसथात्प्रस्थाय योगविद्यानिष्णातमाचार्यमन्विष्यन् कवेरजातीरोपान्तेषु पुण्यक्षेत्रेषु विचचार । अनुदिवसमस्य पार्थिवेषु भोगेषु अरुचिर्महती समजायत । संसारार्णवनिमग्नानां दुःखार्तानामसंख्येयानां जीवानां विषये समुदियाय काचिदनुकम्पा तस्य चेतसि । आधिव्याधिजरामरणादिदुःखविप्लवं जनानामुद्वीक्ष्य मुहुर्मुहुरश्रुधारापरिक्लिन्नमुखोऽभूदसौ संयमी । औपाधिकान्ब्रह्मक्षत्रवैश्यशूद्ररूपान्भेदान्विगणय्यातिवर्णाश्रमी भूत्वा अनाकलितस्वपरभेदः

सर्वत्र समदृष्टिमाश्रित्य येन केनापि दत्तं यत्किंचिदपि भोज्यमश्नन् देहयात्रामकरोत् । शुष्कपर्णैः रथ्यासु विसृष्टैर्भुक्तशेषैरपि मिष्टमभ्यवहारमारचयन् सुखेन बभ्राम । महात्मानं योगिधर्माणमेतं सदाशिवं तथात्वेनाविज्ञाय 'उन्मत्तोऽयम्, जडोऽयम्' इत्युपाहसन्प्राकृता नराः ॥

एवं परिभ्रमन्नेष कदाचित्परमशिवेन्द्रयोगिवर्यमाचार्यमुपससार । स ह्येनं तत्त्वतोऽवगत्य प्रेमार्द्रहृदयो योगविद्यारहस्यमन्वशिक्षयत् । योगाभ्यासदशायामेव ब्रह्मज्ञानसुधारसनिष्यन्दीनि गानान्यस्य वदनारविन्दान्निरर्गलं प्रसुस्रुवुरिति ज्ञायते । यमनियमध्यानाभ्यासनिगृहीतेनान्तःकरणेन योगिभिरनुशिष्टे वर्त्मनीतरदुरवापेन कौशलेन संचरमाणो योगकलया हृदयाब्जकोशमुद्घाट्य सिद्धो भूत्वा परं ज्योतिः साक्षात्कृत्यावाङ्मनसगोचरमानन्दमनुभवन् क्षणमिव नीतान्सुबहूनपि हायनान्नाज्ञासीत् ॥

एवं गुरूपदेशवैभवेन प्राक्तनेन संस्कारेण च योगविद्यां सम्यगवगत्यामन्दानन्दनिर्भरः संयमिसार्वभौमोऽभूत् । परमात्मसाक्षात्कारेण परां निर्वृतिमधिगतवतां परकलितप्रशंसानिन्दादिपराङ्मुखानां परे ब्रह्मणि वर्तमानानां परोरजसां परमहंसानां विभूतिमधिजिगमिषुरात्मनस्तादृशीं मानसीं

वृत्तिमात्मविलासाख्ये शमप्रधाने द्विषष्ट्यार्यानिबद्धे काव्ये विशदमबूबुधत् । योगविद्यागुरोः परिसरवर्ती सदाशिवस्त- द्दर्शनायागतान् पण्डितान्प्रश्नशतैर्व्यामोहयन्नपत्रपया तानधो- मुखान्व्यधत्त । तदीयप्रश्नानां जोषंभावमेवोत्तरयद्भिरपि परिभवासहिष्णुभिर्विद्वद्भिः 'दुर्विनीतोऽयं सदाशिवोऽस्मा- न्प्रश्नैर्लज्जापयति' इति विज्ञप्तो गुरुः परमशिवेन्द्रयोगी कि- ञ्चिदिव विमनीभवन् 'सदाशिव, कदा वा ज्ञास्यसि'दुर्निरो- धाया वाचः संयमनम्!' इति व्याहार्षीत्। सद्य एव स्वीय- मपराधं सम्यगाकलयन् शिष्यः रसनानिरोधोद्यतः आमरणं मौनव्रतमाचरेयमिति कृतनिश्चयः आचार्यं दण्डवत्प्रणम्या- पराधक्षमापणमयाचत। अथाचार्येणानुज्ञातो मौनयोगी भूत्वा अरिषड्वर्गमुन्मूलयन् करतलभिक्षस्तरुतलवासः सुखेन काल- मनैषीत् ॥

कदाचिदगणितदेहाभिमानमनाकलितशीतातपादिखेदं के- दारयोर्मध्ये स्थण्डिलशायिनमेनं संयमीन्द्रमवलोक्य केचन कर्षकाः 'अहो! परित्यक्तसर्वसङ्गस्याप्यस्य किंचिदिवोन्नता केदारसीमापदी शिरस उपधानत्वेनाश्रयणीया वर्तते' इति परस्परं भाषमाणा जग्मुः । अन्येद्युस्त एव तेनैव पथा प्रति- निवर्तमाना: उपधानं विनैवाम्बरतले शिरोधरां प्रसार्य तत्रैव

केदारमध्ये शयानमेनं सदाशिवमवलोक्य 'सर्वसङ्गपरित्यागिनोऽप्यस्य योगिवर्यस्यास्मादृशजनकलितप्रशंसानिन्दादिषु वैमुख्यं न दृश्यते' इति विस्मयमापन्नास्तं नमस्कृत्य यथायथमगच्छन् । उदन्तोऽयं कर्णाकर्णिकया श्रीवेङ्कटेशस्य श्रुतिपथमगात् । सोऽपि सम्यग्विचिन्त्य 'अहो! दुर्निवारः प्रकृतिसंबन्धः संयमिसार्वभौमानामपि' इत्याकलयन्,

"तृणतुलिताखिलजगतां करतलकलिताखिलरहस्यानाम् ।
श्लाघावारवधूटीघटदासत्वं सुदुर्निरसम् ॥"

इत्यन्वशोचदिति श्रूयते ॥

एतादृशीमात्मनो बुद्धिपरिपाकपरिपन्थिनीं न्यूनतां क्रमेण परिहरन् योगविद्यायाः परां काष्ठामधिरूढः सदाशिवः दिव्यनद्योरमरावतीकावेर्योः परिसरारण्यप्रदेशेषु कृतवसतिः नद्योरनयोः पुलिनेष्वास्थितः अवाङ्मनसगोचरं परं ब्रह्म ध्यायन् सुखेन दिवसानत्यवाहयत् । कदाचिदसौ शून्यहृदयो जड इव बधिर इवान्ध इवाविष्ट इवेतस्ततः संचरन् परमात्मनि निबद्धहृदय उन्मत्त इव जनैरालक्ष्यते स्म । एतादृशीमात्मनः शिष्यस्य दशामाकर्ण्यात्मनस्तादृशं हृदयपरिपाकाभावमन्वशोचत्परशिवेन्द्रयोगीति ज्ञायते । तथा हि—

"उन्मत्तवत्संचरतीह शिष्य-
स्तवेति लोकस्य वचांसि शृण्वन् ।
खिद्यन्नुवाचास्य गुरुः पुराहो
ह्युन्मत्तता मे न हि तादृशीति ॥"

सदाशिवो हि परित्यक्तदेहाभिमानः अगणितवर्षातपादि-खेदः केवलमात्मारामः समाधिनिष्ठः कदाचिदुपवनेषु प्रविश्य सुबहूनि दिनानि न कस्यापि दृष्टिगोचरोऽभूत् । कदाचि-त्कवेरकन्यापुलिनेषु स्थावर इव निश्चलो निष्पन्दसर्वावयवः समाधिमारचयत् । एकदासौ कोडिमुडिजनपदस्य नातिदूरे प्रवहन्त्याः कावेर्या मध्ये सैकतमधिष्ठाय स्थितः अतर्किता-पनतेन द्रुमानुन्मूलयता पोतानधरोत्तरीकुर्वता कूलं कर्षता अतिभीषणं प्रवहता जलमयानिव जनपदान्कुर्वता नदीप्रवा-हेण सुदूरमाकृष्टः आवर्तान्तरेषु तूलवद्भ्रामितः अन्तर्वालुकासु निक्षिप्तोऽभूत् । तथाविधमेनं परित्रातुमशक्ताः कूलस्था जनाः 'हन्त! महतीयमापदापतिता योगिवर्यस्य । किं कुर्मः!' इति, 'दुर्दान्तोऽयमनुचितकारी मरणमेतादृशमर्हत्येव' इति खिद्यन्तो व्याहरन्तश्च गृहानयासिषुः । मासत्रितयानन्तरं क्रमेण शममुपयाता वेणीभूतप्रतनुसलिला सैकतप्राया सम-दृश्यत सह्यजा । ग्रामीणाश्च जनाः स्नानपानसौकर्यार्थिनो

नदीमध्ये निपानादिकं रचयितुं सैकतान्यखनन् । खनतश्च कस्यचिदन्तर्भूमौ कठिनमेकं वस्तु खनित्रसंसक्तमिवालक्ष्यत । सद्य एव बहिरुद्धृते खनित्रे रक्तधारासक्तिमभिवीक्ष्य नितरां कातरोऽभूत्कर्मकरः । आश्चर्यमिदमुद्वीक्ष्य सर्वेऽपि मिलित्वा परितो मृदु मृदु खनन्तः शर्कराः समुद्धृत्य समाधिस्थं परितः परिक्षिप्तगात्रं वालुकानिमग्नं सुखसुप्तमिव सैकतान्तः शयानं सदाशिवं योगिवर्यमालोक्य विस्मयस्तिमितलोचनाः 'आश्चर्यमाश्चर्यम् । अचिन्त्योऽयमस्य संयमीन्द्रस्यानुभावः' इति शंसन्तः तस्य शरीरं बहिरानाययन् । आनीतमात्र एव विघटितसमाधिः सुप्तोत्थित इव चक्षुषी निमील्य तस्मात्प्रदेशादुत्थाय यथेच्छमगात् ॥

एकदा करूर्जनपदान्तर्गतेषु केषुचित् केदारेषु पाककपिशान्कलमान्संगृह्य व्रीहिसंचयमेकत्र राशीकृत्य भस्मचिह्नानि निक्षिप्य रात्रौ तत्संरक्षणार्थं भृत्यानाज्ञाप्य गेहं गतवति केदारस्वामिनि, रक्षिणश्च निर्निमेषेण चक्षुषा जागरूकाः परितो व्रीहिराशिं विचरन्तस्तस्थुः । ततः शर्वगलश्यामशार्वरान्धकारे तमसि क्रमेण निमग्ने वसुधातले निशीथिन्यां तेन पथा यदृच्छयागतः शून्यहृदयः सदाशिवः तस्मिन्नेव व्रीहिसंचये स्खलितगतिरपप्तत् । अन्यस्मिन्पार्श्वे विचरन्तो

रक्षिणस्तस्करोऽयमिति कृत्वोद्धृतदण्डास्तं निबन्धुमहमह-मिकयानुधावन्तो धान्यराशौ सुखं शयानमेतं संयमीन्द्रमु-द्वीक्ष्याज्ञानात्तं ताडयितुं प्रावर्तन्त। हन्त! तथोद्धृतलगुड हस्तास्ते योगीन्द्रस्यानुभावेन स्तम्भितान्तःकरणाः निश्चला-वयवाः चित्रीयमाणाश्चित्रार्पितप्रतिमा इव रजनीमखिलामव-तस्थुः। प्रातस्तत्रागतः केदारस्वमी भृत्यानां तादृशीमति-करुणां दशामवलोक्याकुलहृदयः संभ्रान्तः 'किमिदम्?' इति तानप्राक्षीत्। 'स्वामिन्! अमर्षेणैतं महात्मानमज्ञाना-त्ताडयितुं प्रवृत्ता वयमेवमस्वतन्त्राः संवृत्ताः। किं कुर्मः?' इति निवेदयामासुः। एवं भाषमाणानां तेषामारावेण विघ-टितसमाधिरुन्मील्य चक्षुषी तस्मात्स्थलान्मन्दमन्दमुत्थाय यथागतमगात्। गते च तस्मिन् भृत्या अपि स्वस्थाः सम-भूवन्; तुष्टुवुश्च तम् 'अचिन्त्यमहिमा सोऽयमपारकरुणा-म्बुधिः' इति॥

अथैकदा परमात्मतत्त्वसौधाग्रविलसदन्तःकरणोऽसौ यो-गिवर्यः काननेषु परिभ्रमन् कुत्रचिद्राजाधिकारिनिमित्ते पाकसाधनानीन्धनानि राशीकुर्वद्भिः सेवकैर्यदृच्छयादर्शि। तैश्च हृष्टपुष्टाङ्गोऽयं भारवहनायालमिति हठादाकृष्टः शिरसि निक्षिप्तकाष्ठभारः सहैव तैर्भारवाहिभिर्ग्रामं नीतोऽभूत्।

यावच्चाधिकारिणो गृहाङ्गणेषु पूर्वमेवान्यैः सज्जीकृतेष्विन्धनसंचयेषु स्वयमीन्द्रः स्वीयमपि काष्ठभारं न्यक्षिपत्तावदेव क्रोधेनेव प्रस्फुरत्स्फुलिङ्गेन प्रवर्धमानज्वालालीढेन्धनराशिना कल्पान्तानलकठोरेण जातवेदसा क्षणादेव भस्मीकृतमासीदधिकारिणः सदनमखिलम् । तदद्भुतं निरीक्ष्य 'हन्त! धिगस्मानज्ञानादस्मिन्महानुभावे महापराधमाचरितवतः' इति नितरामन्वशोचन्त सेवका राजाधिकारी च— इति तत्कालवेदिनो मन्त्रयन्ते ॥

पामरा हि जना अणिमाद्यष्टैश्वर्यसंयुक्तं सिद्धेश्वरमेनं तथात्वेनाविज्ञाय उन्मत्तोऽयमित्याकलयन्ति स्म । निरपराधमधुरवयसि वर्तमाना बालकाश्च तं रथ्यासु शून्यहृदयवत्परिभ्रमन्तमुत्साहेन परिवार्य केचन शिरोरुहाणि केचन हस्ताग्राणि केचन पादाङ्गुष्ठांश्चाकृष्यात्मानं विनोदयामासुः । योगीन्द्रोऽपि तेष्वर्भकेषु निरतिशयां प्रीतिमावहन् अन्यैर्दत्तानि भक्ष्याणि तेभ्यो दत्त्वोपच्छन्दयन्स्नेहमदर्शयत् । एकस्मिन् दिवसे बालकास्तं परिवार्य 'तात! मधुरापुर्यामद्य वृषभवाहनमहोत्सवो भवति सुन्दरनाथस्य' इति शृणुमः । तं महेश्वरं सेवितुमस्मांस्तत्र नेतुमर्हसि इत्यवदन् । अशक्यमिदमिति जानतामपि तेषामिदं परिहासजल्पितमाकर्ण्य स-

दाशिवः तान् आत्मनः शिरसि अंसद्वये चारोप्य अक्षीणि क्षणं निर्मीलयतेति संज्ञामकरोत् । तेऽपि तथैवान्वतिष्ठन् । अनुक्षणमेव यावल्लोचनान्युन्मील्य पश्यन्ति, तावन्महता भक्तिपरवशेन जनौघेन परिवार्यमाणं महावृषभस्य पृष्ठे देदीप्यमानं नृत्तगीतवाद्यादिभिः संगीतसुखमनुभवन्तं भगवन्तं सुन्दरेश्वरं साक्षादकार्षुः । अवागच्छंश्च मधुरानगरचत्वरे सह सदाशिवेन स्वेषामवस्थितिम् । विस्मिताश्च 'स्वप्नो वा किमियं माया किमु वा चित्तविभ्रमः' इत्यन्योन्यमुपांशु मन्त्रयामासुः । संयमीन्द्रोऽपि तेषां बालकानां यथाभिमतं मोदकादिभक्ष्यजातं दत्वा नितरामानन्दयामास । बालकाश्च किमिदमित्याश्चर्यमेदुरान्तरङ्गाः महोत्सवदर्शनानन्दनिर्भराः प्रभातप्रायामपि रजनीं नाज्ञासिषुः । उत्सवान्ते च सदाशिवेन यथापूर्वं स्वीयं ग्राममानीताः कुतूहलचञ्चललोचनाः अद्भुतमिदं जननीभ्यो निवेद्य भुक्तशेषं भक्ष्यजातमपि प्रदर्श्य वृषभोत्सवं यथानुभूतमनुवर्णयामासुः ॥

महाशिवरात्र्यादिमहोत्सवदिवसेषु वाराणसीमधुरारामेश्वरादिदिव्यक्षेत्रेषु एकस्यामेव रात्रावसौ संयमीन्द्रः साक्षात्कृतः तत्तद्देशवासिभिरिति च शृणुमः ॥

अनाघ्राताक्षरगन्धः कश्चिद्ब्रह्मचारी कदाचिदेतं संयमीन्द्रं

भक्तिप्रवणेन मनसा सर्वतोऽनुगच्छन्नुपासांचक्रे । तदीयेनोपासनेन प्रसन्नः सदाशिवः करुणार्द्रया दृशा तमसकृदवलोकयन्नन्वगृह्णात् । एकदासौ वर्णी श्रीरङ्गे यमिनां योगदृष्टेरञ्जनं देवं रङ्गनाथं सेवितुमात्मनोऽभिलाषं तस्मै सप्रश्रयं न्यवेदयत् । 'तर्हि क्षणं लोचने निमीलय' इति संज्ञामकरोन्मौनी सदाशिवः । सोऽपि यथानिर्देशमाचर्यानुक्षणमेव लोचने उन्मील्य कर्पूरनीराजनेन संभाव्यमानस्य श्रीरङ्गनाथस्य पुरतः साक्षादवस्थितमात्मानं पार्श्वे सदाशिवं चापश्यत् । अथ कतिपयनिमेषापगमे संयमीन्द्रः स्वयमन्तर्हितोऽभूत् । तददर्शनेन विषण्णहृदयः स वर्णी आसन्नवर्तिषु मण्टपेषु प्राकारेषु देवालयेषु चान्विष्य विफलप्रयत्नः पादचारेण महान्तमध्वानं विलङ्घ्य कतिपयैरहोभिः करूर् जनपदमाससाद । तत्र च समाधिस्थं संयमीन्द्रं साक्षात्कृत्य भक्तिपरवशः तत्पादयोः पतित्वा सर्वमप्युदन्तं व्यजिज्ञपत् । सोऽपि दयार्द्रहृदयः सैकते अक्षराणि विलिख्य तस्मै मन्त्रानुपादिक्षत् । अनुपदमेव तस्य साङ्गाः सरहस्या आम्नायाः सकलाश्च विद्या हृदि प्रादुरासन् । पण्डितोत्तंस इति राजभिरादृतो मानितश्च स वर्णी पौराणिको भूत्वातुलां संपदमार्जितवान्— इति कथयन्ति वर्षीयांसः पुरावृत्तविचक्षणाः ॥

अगणितदेहाभिमानोऽयं संयमीन्द्रः अनवरतमानन्दमये ब्रह्मणि संसक्तमानसः अकुतोभयः अप्रतिहतगतिरवनितले परिभ्रमन् कदाचिन्नारीमणिभिरापूर्णं कस्यचिद्यवनमहीपतेरन्तःपुरं यदृच्छया प्राविक्षत् । अवधूतवेषेणासूर्यपश्यानां राजदाराणामन्तिके चरन्तमेनमवलोक्य सद्यः क्रोधेन ज्वलन्यवनः कृपाणमाकृष्य तस्य योगिवर्यस्य बाहुमेकमच्छिनत् । सदाशिवस्तु निकृत्तो बाहुरित्यविज्ञायैव स्वस्थवदविकारदर्शनो यथापूर्वं तस्मात्प्रदेशादन्यत्र गतोऽभूत् । तादृशीमस्य मनोगतिमवगत्य विस्मयमापन्नो यवनाधिपः 'महात्मासौ संयमीन्द्रो मया जाल्मेन निकृत्तपाणिरपि किंचिदप्यविगणय्य हृष्टान्तरङ्गो विचरति; अस्य प्रसादनादृते सुखं प्राणितुं न शक्यते वित्तमदमत्तेन सदसद्विवेकशून्येन मया' इत्यात्मानं विनिन्दन् शोकाविष्टचेतनः तमेव संयमीन्द्रं पृष्ठतोऽनुजगाम । अनुससार च छायेव तं सुबहूनि दिनानि । तथानुधावन्तमगणितशीतातपादिखेदं तं यवनमुद्वीक्ष्य दयाविष्टः सदाशिवः 'किमर्थमेवं मामनुसरसि?' इति संज्ञया अप्राक्षीत् । सोऽप्यात्मनानुष्ठितस्य महापराधस्य क्षमापणमयाचत । कीदृशोऽयमपराधः? इति पुनरनुयुक्तः 'भगवन्! अज्ञेन मया करवालेन भगवतो बाहुरेको निकृत्तः' इति

साश्रं न्यजिज्ञपत् । तदनन्तरमेव छिन्नमात्मनो बाहुं विज्ञाय अन्येन पाणिना निकृत्तमंसदेशं ममार्ज । सद्य एव यथापूर्वमन्यं बाहुं तत्स्थाने प्ररोहन्तं दृष्ट्वा भीतभीतो यवनः दण्डवत्प्रणम्य तदीयमनुग्रहं प्रार्थयामास । योगीन्द्रोऽपि तथेत्यनुगृह्य यथागतमगात् । इदं चात्यद्भुतमपदानमेवमनुवर्णयन्ति सदाशिवेन्द्रस्तुतौ श्रीशिवाभिनवनृसिंहभारतीस्वामिनः श्रीमच्छृङ्गगिरिपीठमलंकुर्वन्तो यतिसार्वभौमाः—

"योऽनुत्पन्नविकारो बाहौ म्लेच्छेन छिन्नपतितेऽपि ।
अविदितममतायास्मै प्रणतिं कुर्मः सदाशिवेन्द्राय ॥

पुरा यवनकर्तनस्रवदमन्दरक्तोऽपि यः
पुनः पदसरोरुहप्रणतमेनमेनोनिधिम् ।
कृपापरवशः पदं पतनवर्जितं प्रापय-
त्सदाशिव यतीट् स मय्यनवधिं कृपां सिञ्चतु ॥" इति ॥

सदाशिवमहिमानुवर्णनपरे तस्मिन्नेव स्तोत्रे—

'न्यपतत्सुमानि मूर्धनि येनोच्चरितेषु नामसूक्तस्य ।
तस्मै सिद्धवराय प्रणतिं कुर्मः सदाशिवेन्द्राय ॥'

इति निगद्यते ॥

अद्भुतानीमान्यपदानानि सदाशिवस्याधुनिकैरविज्ञातयो-

गाभ्यासरहस्यैर्वितथस्तुतिकोटौ परिगण्यन्ते इति न वयं न जानीमः। प्रकृतिरेवायमनाकलिताध्यात्मतत्त्वानाम् 'प्रकृतिरेव परं ब्रह्म' इत्यनवरतमनुध्यायतां लोकायतिकप्रायाणां नवीनवैज्ञानिकानाम्। परमियमेव परा काष्ठा अनिरूपकतायाः, यच्छरीराद्विप्रकृष्टान्बाह्यान्भूतनिवहान् धूमशकटाकर्षणसाधनत्वेन स्वायत्तीकर्तुमुद्योगमनुतिष्ठन्पुरुषः आत्मनो नेदिष्ठान् भोगायतनत्वेन परिणतान् नाड्यादिरूपेणावस्थितांस्तानेव भूतगणानाकाशगमनसाधनत्वेन परिणमयितुमुपायाः सन्तीति न विश्वसिति इति। अन्तर्मुखाः खलु सिद्धेश्वराः। कथमिव तेषां महिमानं सर्वात्मना बहिर्मुखा वयं जानीमः। ते किलात्मारामाः; वयं त्विन्द्रियार्थप्रवणाः। ते ह्यन्तर्हृदयकोणे भासमानं परं ज्योतिर्योगकलया साक्षात्कुर्वन्तो निरन्तरं रमन्ते; वयं तु रथ्यासु भासमानं वैद्युतं ज्योतिश्चर्मचक्षुषावलोकयन्तः परमानन्दनिर्भरा वर्तामहे। ते हि सात्त्विकैराहारैः यमनियमध्यानधारणादिभिश्च स्वीयशरीरानुशासनपरा दृश्यन्ते; वयं तु मदकरैराहारैः मदविघूर्णितैर्व्याहारैश्चान्यशरीरानुशासनपराश्चेष्टामहे। ते हि परिदृश्यमानं जगन्नश्वरमिति तृणवदाकलयन्ति; वयं तु चराचरात्मकमिदमेव जगच्छाश्वतं भागधेयेनोपलब्धमिति मन्यामहे॥

तादृशेष्वात्मारामेषु प्रधानभूतोऽयं सिद्धेश्वर आसीदित्यत्र नास्ति विशयलेशोऽपि निरूपकाणाम् ॥

उक्तं चाभियुक्तैः—

'निजगुरुपरमशिवेन्द्रश्लाघितविज्ञानकाष्ठाय ।
निजतत्त्वनिश्चलहृदे प्रणतिं कुर्मः सदाशिवेन्द्राय ॥' इति ।

संयमीन्द्रोऽसौ इतः पञ्चसप्तत्यधिकशतात् हायनेभ्यः पूर्वं नवसालजनपदान्तर्गते तिरुवरङ्कुलग्रामासन्नविपिने संचरन् विजयरघुनाथतोण्डमाभिधकेन शिवज्ञानपूर्ण इति प्रसिद्धिमधिगतवता तद्देशाधिपतिना यदृच्छया साक्षात्कृत आसीदिति श्रूयते । भक्तिश्रद्धासमन्वितेन चेतसा वर्षाण्यष्टावात्मानमनुसेवमानस्य तस्य विशुद्धेन चरितेन संतुष्टान्तरङ्गो योगिवर्यः 'राष्ट्रभरणाधिकृतेन त्वया एवं वर्तितव्यम्' इति सैकते कांश्चन नियमान् विलिख्य, अन्यदखिलं गोपालकृष्णशास्त्रिमुखाद्बुध्यस्वेति च संज्ञया समुपादिक्षत् । 'शास्त्री चायं कवेरकन्यापरिसरे भिक्षाण्डार् क्षेत्रे निवसति' इति विज्ञाय नवसालजनपदाधीशस्तं सपरिवारं स्वराष्ट्रमानीय ग्राममेकं वितीर्य आत्मनः कुलगुरुत्वेनावृणोत् । तद्वंशीयाश्चाद्यापि राजगुरुत्वेनाद्रियन्ते ॥

अनुसंवत्सरमस्मिन् राष्ट्रे महता विभवेनानुष्ठीयमानः शारदानवरात्रमहोत्सवः विद्वत्संभावना दक्षिणामूर्तिपूजादिकं च सदाशिवोपदिष्टयैव सरण्या अद्यापि निर्वर्त्यन्ते । सदाशिवेन यत्र योगाक्षराणि लिखितानि ता एव वालुकाः तेन शिवज्ञानपूर्णेन पेटिकानिक्षिप्ता दक्षिणामूर्तिसंनिधावद्यापि पूजार्हेषु द्रव्येषु मुख्यतया परिगण्यन्ते । योगिवर्यस्यास्यानुग्रहमुपलभ्यैव वानवास्योऽयं जनपदाधीशः क्रमेण सुप्रसिद्धो विद्वद्भिर्जेगीयमानयशा ववृधे इतीदं पाण्ड्यदेशीयानां चोलमण्डलवासिनां च विदितचरमेव ॥

ऐरोपीयतुरुष्कदेशपर्यन्तमनेन संयमीन्द्रेण कदाचिदटितमिति च विश्वसन्त्यदसीयमहिमानुवर्णनपराः ॥

एवमसौ मौनयोगी सुबहून्हायनान् परमात्मध्याननिरतः पाञ्चभौतिकमात्मनः शरीरं हातुमिच्छन् कदाचित् नेरूर् ग्रामवासिनो विप्रानाहूय 'भो द्विजाग्रेसराः, मिथुनमासीयज्येष्ठशुद्धदशम्यां योगसमाधिना ब्रह्मसायुज्यप्राप्तिः शरीराभिर्याणं च मे भविता; तस्मिन्नेव दिवसे बाणलिङ्गमेकं गृहीत्वा कश्चन ब्राह्मणो वाराणस्याः समेष्यति । लिङ्गमिदं मदीयसमाधिस्थलस्यान्तिक एव कस्मिंश्चिदालये प्रतिष्ठाप्यताम्' इत्यात्मनोऽभिलाषमाविश्चकार ॥

तेऽपि तमेव समयं प्रतीक्षमाणाः तस्यामेव दशम्यां काश्याः समागतं विप्रवर्यं पूर्वमेव खानितमवटं स्वयमेवावतीर्णेन सदाशिवेनात्मनः कलेबरत्यागं च सममेवावलोक्य आश्चर्यानन्दसागरमग्नास्तदुक्तं सर्वमपि यथानिदेशमन्वतिष्ठन् । जीवन्मुक्तोऽसौ विप्रकृष्टान्तरेषु त्रिषु स्थलेषु पश्यतामेव तत्तद्देशनिवासिनां पुरतस्तस्मिन्नेव समये सममेव योगसमाधिना तनुत्यागमकरोदिति—

'त्रिविधस्यापि त्यागं वपुषः कर्तुं स्थलत्रये य इह ।
अकरोत्समाधिमस्मै प्रणतिं कुर्मः सदाशिवेन्द्राय ॥'

इत्याद्यभियुक्तोक्तिभिरवगम्यते । परं त्वेतेषु नेरूर् जनपदान्तर्गतमन्तिमसमाधिस्थलमेव दक्षिणदेशेषु प्रसिद्धम् । अत्रैव नवसाल्पुराधिपैर्महता वैभवेन द्रविणव्ययेन च नित्यनैमित्तिकपूजादिकं पक्षोत्सवमासोत्सववर्षोत्सवादयश्चानुसंवत्सरमद्यापि निर्वर्त्यन्ते ॥

एवंभूतापरिमेयाश्चर्यशक्तिविद्योतितदिव्यानुभावानां जीवन्मुक्ताग्रेसराणां संयमीन्द्राणामेतेषां जन्मना भूषितः पवित्रीकृतश्चायं दक्षिणापथ इति महदिदं भागधेयमगस्त्यपरिगृहीताया दिशः । दक्षिणापथवास्तव्या जना योगिवर्यस्या-

स्यात्यद्भुतान्यपदानान्यद्यापि साभिनिवेशमुद्गायन्ति, अदसीयमहिमानुचिन्तनमपि पावनमाकलयन्ति ॥

विशुद्धेन चारित्रेण, निर्मलेनान्तःकरणेन, अनितरसुलभेनारिषड्वर्गोन्मूलनेन, असाधारणेन अध्यात्मविद्याकौशलेन च ईश्वरांशसंभूता इव विराजमानाः श्रीमच्छृङ्गगिरिपीठमलंकुर्वन्तो यतिसार्वभौमा अपि अहर्निशमस्य सदाशिवेन्द्रस्यानुभावविशेषानुवर्णनेन प्रतिकृतिदर्शनेन चात्मानं पवित्रीकुर्वन्तीति इदमेवास्य महानुभावस्यावाङ्मनसगोचरं वैभवमवगमयतीति नातः परं कथयितुं प्रभवामः ॥

प्रतिकृतिरियमेतैरेव श्रीशृङ्गगिरिपीठाधिपतिभिरादरातिशयेन शिष्यप्रीत्या च श्रीवाणीविलासमुद्रायन्त्रालयाध्यक्षाय अनुगृहीता ग्रन्थरत्नस्यास्य भूषायमाणा विलसति ॥

सदाशिवेन्द्रेण विरचितेष्वध्यात्मविद्याग्रन्थेषु ब्रह्मसूत्रवृत्तिः प्रधानतयोपकरोति प्रस्थानत्रयपठनाभिलाषिणाम् । सन्त्येवानेका ब्रह्मसूत्रवृत्तयः; अथाप्येताः ललिततया भारत्या, मधुरया आशयाविष्करणसरण्या, आवर्जिकया हेतूपन्यासवैखर्या च समुपेतस्यास्य वृत्तिग्रन्थस्य शततमीं क-

लामपि न स्पृशन्तीति विशदीभवेदेवाध्यात्मविद्याप्रवचनचणानाम् । प्रतिसूत्रमस्यां फलभेदोपपादनपूर्वकं पूर्वपक्षसिद्धान्तयोः संक्षेपतो निरूपणम्, सूत्रसंगतिः, अधिकरणसंगतिः, पादसंगतिरित्यादयो विषया निपुणं निरूपिताः श्रीमच्छंकरभगवत्पादभाष्यनिगूढनिक्षिप्तमर्थजातं विशदावभासं विरचयन्तीत्यध्यात्मविदो मन्यन्ते । सरससरसामस्या आविष्कृतामुपपादनरीतिमनुशीलयन्तो विद्यार्थिनः 'कोशवानाचार्यः' इत्यभियुक्तोक्तेरर्थमनुसंदधत इव ॥

ग्रन्थमेनमन्तरा अनेन संयमीन्द्रेण द्वादशसंख्यानामुपनिषदामपि दीपिका विरचिता इत्यवगम्यते । तासामपि मुद्रणभागधेयमस्य मुद्राशालाध्यक्षस्य न चिरादेव भविष्यतीति विश्वसिमः ॥

संयमीन्द्रोऽसौ योगाभ्यासनिरतानामत्यन्तोपकाराय पतञ्जलिना 'अथ योगानुशासनम्' इत्यारभ्योपदिष्टां सूक्ष्मदृष्टिभिरेवावगन्तव्यां गहनार्थां ब्रह्मसाक्षात्कारसरणिं विशदयितुं योगसूत्राणां योगसुधाकरनाम्नीमिमामतिरमणीयां वृत्तिं प्रणीय, ध्रुवकूर्मादिनाडीविज्ञानं समाधिस्वरूपं यमनियमादिभिरभ्यासैरन्तःकरणनिग्रहप्रकारादिकं चोपपाद्य, कैवल्यानन्दप्राप्तेर्मार्गदर्शी भूत्वा सत्यमेव अज्ञानान्धकारे नि-

मग्नस्यास्य जीवलोकस्य स्वयमपि सुधाकरायते ॥

सर्वास्वप्यस्य सूक्तिषु परामृश्यमानासु अनुवाचकानां पार्थिवभोगेष्वरुचिः, परमात्मसाक्षात्कारः, परानन्दनिर्वृत्तिश्च स्वयमेवाविर्भविष्यतीति निश्चिनुमः । यथोक्तमनेनैव संयमीन्द्रेण—

संत्यज्य शास्त्रजालं संव्यवहारं च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी ॥

वैराग्यविपुलमार्गे विज्ञानोद्दामदीपिकोद्दीप्तम् ।
आरुह्य तत्त्वहर्म्ये मुक्त्या सह मोदते यतिराट् ॥

आशावसनो मौनी नैराश्यालंकृतः शान्तः ।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥

इति

सहृदयसमुदायदासः
र. कृष्णमाचार्यः एम् . ए.
विद्यानिधिः ।

॥ श्रीः ॥

## योगसुधाकरो नाम

# ॥ योगसूत्रवृत्तिः ॥



यद्भावनादवापीयं प्रत्यक्चितिरनामया ।
क्लेशकर्माद्यसंस्पृष्टं तमीशं कंचनाभजे ॥ १ ॥

श्रीमत्पतञ्जलेस्तस्य पदद्वन्द्वमनिन्दितम् ।
वन्दे येन मनःकायवाचां शुद्धिरकार्यसौ ॥ २ ॥

विद्यारत्नं मया लब्धं यत्कृपापारवारिधेः ।
वन्दे तान्विबुधैर्वन्द्यान्वन्दकानन्ददान्गुरून् ॥ ३ ॥

श्रीमद्देशिकवक्त्राब्जान्निशम्याथ विलोक्य ताम् ।
फणीन्द्रभणितेः काचिद्वृत्तिरारभ्यते मया ॥ ४ ॥

इह खलु भगवान्पतञ्जलिः प्रेक्षावत्प्रवृत्त्यौपयिकं शास्त्र-प्रतिपाद्यं दर्शयति—

**अथ योगानुशासनम् ॥ १ ॥**

अत्र अथशब्दः आरम्भार्थः, अर्थान्मङ्गलार्थश्च । 'युज समाधौ' इति धातोर्योगः समाधिः; तस्यानुशासनं हैरण्यगर्भं शास्त्रमनुसृत्य शिष्यते व्याख्यायते ससाधनः सफलः समाधिरनेनेत्यनुशासनं शास्त्रम् । तथा च कस्मैचित्कैवल्यकामाय प्रतिपाद्ययोगप्रतिपादकं शास्त्रमारंभ्यत इत्यक्षरार्थः । तत्र समाधिर्द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्चेति । स च चित्तस्य धर्मः । चित्तं हि त्रिगुणात्मकत्वात्पञ्चभूम्युपेतम् । भूमयश्च— क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति । तत्र— रजसा विषयेषु क्षिप्यमाणं क्षिप्तम्; तमसा निद्रालस्यादिवृत्तिमन्मूढम्; ईषद्रजस्तमःसंस्पृष्टेन सत्त्वेन कादाचित्कध्यानयुक्ततया क्षिप्ताद्विशिष्टं विक्षिप्तम्; विधूतरजस्तमोमलेन शुद्धसत्त्वेनैकाग्रमेकतानम्; प्रशान्तसकलवृत्तिकं संस्कारशेषं निरुद्धम् । एवं च आद्यभूमित्रयपरित्यागेनावशिष्टभूमिद्वयोपेतस्य चित्तस्य समाधिद्वयं धर्म इति विवेकः ॥

अधुना द्विविधस्य समाधेः साधारणं लक्षणं लक्षयति—

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

रजस्तमोवृत्त्योर्निरोधो योग इत्यर्थः । अतः सात्त्विकवृत्तिसत्त्वेऽपि संप्रज्ञाते नाव्याप्तिः ॥ २ ॥

ननु बुद्धिवृत्तिस्वभावायाश्चितिशक्तेर्वृत्तिनिरोधे कथं स्थितिरित्याशङ्कयाह——

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

यदा सर्वासां वृत्तीनां निरोधः, तदा द्रष्टुश्चितिशक्तेः स्वाभाविके स्वरूपे स्थितिः कुसुमापगमे स्फटिकमणेरिवेत्यर्थः । चितिशक्तेश्चैतन्यमात्रं स्वभावो न वृत्तय इति भावः ॥ ३ ॥

ननु तर्हि व्युत्थाने चितिशक्तेः स्वरूपात्प्रच्युतिः स्यादित्यत्राह——

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

यद्यपि निर्विकारा चितिशक्तिः सदा स्वरूप एवावतिष्ठते, तथापि निरोधादन्यत्र वृत्तिषूत्पद्यमानासु तत्र चितिच्छायायां प्रतिबिम्बितायां तदविवेकात्तत्तादात्म्यमापन्नेव चितिशक्तिर्भवति जपारक्त इव स्फटिकः । अतो न स्वरूपात्प्रच्युतिः । न हि लौहित्यभ्रमसमये समस्ति स्फटिकमणेरवदातस्वभावात्प्रच्युतिरिति भावः । एतेन सूत्रद्वयेनार्थाद्यन्निरोधे चितिशक्तिः स्वरूपप्रतिष्ठा यद्व्युत्थाने स्वरूपाप्रतिष्ठेव भवति तच्चित्तमिति द्वितीयसूत्रगतचित्तपदं व्याख्यातं भवति ॥ ४ ॥

अधुना निरोद्धव्यानां वृत्तीनामियत्तामाह—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः ॥ ५ ॥**

पञ्च तयबर्था अवयवा वक्ष्यमाणाः प्रमाणादयो यासां सामान्यवृत्तीनां ताः पञ्चतय्यो वृत्तयश्चित्तस्य परिणामाः । बहुवचनं तु मैत्रादिपुरुषबहुत्वाभिप्रायेण । ताः कीदृश्यः ? क्लिष्टा अक्लिष्टाः ; वक्ष्यमाणैः क्लेशैः संश्लिष्टाः स्वरूपाप्रतिष्ठाप्रत्ययाः क्लिष्टाः, तैरसंश्लिष्टाः स्वरूपप्रतिष्ठाप्रत्यया अक्लिष्टाः । यद्यपि पञ्चस्वेव क्लिष्टानामक्लिष्टानां चान्तर्भावः, तथापि क्लिष्टा एव निरोद्धव्या इति मन्दबुद्धिं वारयितुं ताभिः सहाक्लिष्टा अप्युदाहृताः ॥ ५ ॥

अथ नामधेयलक्षणाभ्यां वृत्तीर्विशदयितुं सूत्रषट्कमाचष्टे—

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥**

अतोऽपरा वृत्तिर्न समस्तीत्युद्देशसूत्रस्य फलम् ॥ ६ ॥

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

त्रीण्येव प्रमाणानीति भावः । वृत्तावज्ञातार्थावगाही चितिशक्तेः प्रतिबिम्बः प्रमा । तत्करणं वृत्तिः प्रमाणम् ।

तत्त्वं प्रमाणसामान्यलक्षणम् । तत्र चक्षुरादिद्वारा व्यक्ति-विशेषनिर्धारणी चित्तवृत्तिः प्रत्यक्षप्रमाणम् । तदाकारवृत्तौ चितिशक्तेः प्रतिबिम्बः प्रत्यक्षप्रमा । एवं ध्यानसमाधि-द्वारा चितिशक्तिविशेषावद्योतिका संप्रज्ञाताख्या चित्तवृत्तिः प्रत्यक्षप्रमाणम् । ज्ञाता चितिशक्तिः फलम् । लिङ्गज्ञानद्वारा लिङ्गिसामान्यनिर्धारणी वृत्तिरनुमानम् । तत्र प्रतिबिम्बो-ऽनुमितिः । पदार्थज्ञानद्वारा वाक्यार्थावगाहिनी वृत्तिरा-गमः । तत्र प्रतिबिम्बः शाब्दः । अनुमानागमावुभयत्र समानाविति पृथङ् नोदाहृतौ ॥ ७ ॥

**विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥**

विपर्यय इति लक्ष्यनिर्देशः । मिथ्याज्ञानं बाधानन्तरं व्यवहाराजनकं यत् अतद्रूपप्रतिष्ठं तस्यार्थस्य यद्रूपं पार-मार्थिकं स्वरूपं तत्राप्रतिष्ठितं तदनवगाहि । तत्त्वं लक्षणम् । अतो न विकल्पेऽतिव्याप्तिः, तस्य बाधितत्वेऽपि केषांचि-त्पण्डितानां व्यवहारजनकत्वात् । नापि संशये, तस्यापि लक्ष्यत्वात् ॥ ८ ॥

**शब्दज्ञानानुपाती वस्तुशून्यो**
**विकल्पः ॥ ९ ॥**

'राहोः शिरः' इति शब्दश्रवणानन्तरं जायमाना वस्तु-

शून्या वृत्तिर्विकल्पः । अतो वाक्यार्थगोचरवृत्तौ नातिव्याप्तिः, तस्या वस्तुशून्यत्वाभावात् । नापि विपर्यये, तस्य शब्दज्ञानाननुपातित्वात् ॥ ९ ॥

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

वस्त्वभावः प्रतीयते यस्मिन्नावारके तमसि सति, तत्तमोऽभावप्रत्ययः । तं विषयीकुर्वती वृत्तिर्निद्रा । तस्याः 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इति स्मरणस्यानुभवपूर्वकत्वाद्वृत्तित्वम् ॥

**अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥**

अनुभूतस्य पित्रादेः असंप्रमोषः तदनुभवजन्यमनुसंधानं स्मृतिरित्यर्थः । एतेन वृत्तय इत्याद्यनुभूतविषयेत्यन्तेन सूत्रसप्तकेन द्वितीयसूत्रगतवृत्तिपदं व्याख्यातं भवति । इतोऽवशिष्टेन पादेन निरोधपदमर्थाद्व्याख्यायत इति द्रष्टव्यम् ॥

अधुना पञ्चविधवृत्तिनिरोधोपायमाह—

**अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

चित्तस्य निसर्गतोनिर्गतस्रगादिगोचरवृत्तिसरित्पूरं वैराग्येण विनिवार्य समाध्यभ्यासेन प्रशान्तप्रवाहः संपाद्यते ।

अतस्तदुभयनिबन्धनो निरोध इत्यर्थः ॥ १२ ॥

ननु जपादावावृत्तिलक्षणोऽभ्यासो विधातुं पार्यते; को नाम निरोधेऽभ्यास इत्यत आह—

**तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥**

तत्र तयोर्मध्ये । स्थितिर्नैश्चल्यं निरोधः, तत्र । 'चर्मणि द्वीपिनं हन्ति' इतिवन्निमित्तार्थेयं सप्तमी । एवं च स्थितिनिमित्तको यत्नो मानस उत्साहः स्वत एव बहिःप्रवाहशीलं चित्तं सर्वथा निरोत्स्यामीत्येवंविध उत्साह आवर्त्यमानोऽभ्यास इत्युच्यते ॥ १३ ॥

नन्वद्यतनाभ्यासः स्वयमदृढः सन्ननादिसंचितव्युत्थानसंस्कारान्कथमभिभवेदित्याशङ्क्याह—

**स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥**

यदि दिवसैर्मासैर्वा समाधिसिद्धिं वाञ्छेत्, तदा 'विद्यमानाश्चत्वार एव वेदाः; तानध्येतुं गतस्य माणवकस्य पञ्च दिवसा अतीताः; नाद्याप्यसौ समागतः' इति मूढवचनानुसार्येवायं योगी स्यात् । अतः संवत्सरैर्जन्मभिर्वा

दीर्घकालं योग आसेवितव्यः । तथा च स्मर्यते— 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति । यदि चिरमासेव्यमानोऽपि विच्छिद्य विच्छिद्यासेव्येत, तर्ह्युत्पद्यमाना योगसंस्काराः समनन्तरभाविविच्छेदकालीनैर्व्युत्थानसंस्कारैरभिभूयेरन् । अतो निरन्तरमासेवितव्यः । सत्कार आदरः । अनादरे लयविक्षेपकषायादयः प्रसज्जेरन् । तस्मादादरेणासेवितव्यः । दीर्घकालादित्रैविध्येनासेवितस्य समाधेर्दृढभूमित्वं नाम प्रबलतरदुःखेनापि चालयितुमशक्यत्वम् । तच्च स्मर्यते— 'यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते' इति ॥ १४ ॥

अथ वैराग्यं द्विविधमपरं परं चेति । अपरं च यतमानव्यतिरेकैकेन्द्रियवशीकारभेदेन चतुर्विधम् । तत्राद्यत्रयमर्थात्सूचयन्साक्षाच्चतुर्थमाह—

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

स्रक्चन्दनादयो विषया दृष्टाः । वेदोक्तस्वर्गादय आनुश्रविकाः । तत्रोभयत्रापि सत्यामपि तृष्णायां विवेकतारतम्येन यतमानादिवैराग्यत्रयं भवति । यतमानत्वं नाम 'अस्मिञ्जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां वि-

ज्ञास्यामि ' इत्युद्योगः । स्वचित्ते पूर्वं विद्यमानानां दोषाणां मध्येऽभ्यस्यमानेन विवेकेनैतावन्तः पक्वा एतावन्तोऽवशिष्टा इति विवेचनं व्यतिरेकः । दृष्टानुश्रविकविषयप्रवृत्तेर्दुःखात्मकत्वबोधेन तां प्रवृत्तिं परित्यज्य मनस्यौत्सुक्यमात्रेण तृष्णास्थापनमेकेन्द्रियत्वम् । वितृष्णत्वं वशीकारः । तदिदमपरं वैराग्यमष्टाङ्गयोगप्रवर्तकत्वेन संप्रज्ञातस्यान्तरङ्गम्, असंप्रज्ञातस्य तु बहिरङ्गम ।। १५ ।।

अथ तस्यान्तरङ्गं परवैराग्यमाह—

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ।। १६ ।।**

संप्रज्ञातसमाध्यभ्यासपाटवेन गुणत्रयात्मकात्प्रधानाद्विविक्तस्य पुरुषस्य ख्यातिः साक्षात्कारः ; तस्मादशेषगुणत्रयव्यवहारे वैतृष्ण्यं यत्, तत्परं वैराग्यमित्यर्थः ।। १६ ।।

इत्थमभ्यासवैराग्ये निरूप्य तत्साध्यं समाधिमाह—

**वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ।। १७ ।।**

सम्यक्प्रज्ञायते येन भाव्यं वस्तु स संप्रज्ञातः समाधिर्भावनाविशेषः । स च वितर्कादिरूपैश्चतुर्भिरनुगमाच्चतुर्विधः— सवितर्कः सविचारः सानन्दः सास्मित इति ।

तत्र भावनया भाव्यभूतेन्द्रियगोचरसाक्षात्कारः सवितर्कः। पञ्चतन्मात्रान्तःकरणगोचरसाक्षात्कारः सविचारः। रजस्तमोलेशानुविद्धसत्त्वप्रधानबुद्धिगोचरसाक्षात्कारः सानन्दः। शुद्धसत्त्वप्रधानमहत्तत्त्वगोचरसाक्षात्कारः सास्मितः। तत्र वितर्कविचारद्वयं ग्राह्यम्। आनन्दो ग्रहणम्। अस्मिताख्यो ग्रहीता। तेषु ग्राह्यग्रहणग्रहीतृषु भावनोत्कर्षः संप्रज्ञातो योग इत्यर्थः॥ १७॥

इत्थमपरवैराग्यसाध्यं संप्रज्ञातं निरूप्य परवैराग्यसाध्यमसंप्रज्ञातमाह—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः॥ १८॥**

विरामो वृत्त्युपरमः, तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः प्रयत्नः, तस्याभ्यासः पौनःपुन्येन संपादनम्, तत्पूर्वस्तज्जन्यः संप्रज्ञातादन्यः संस्कारशेषः प्रशान्तसकलवृत्तिकस्य चित्तस्वरूपस्य दुर्लक्ष्यत्वात्संस्काररूपेण योऽवशिष्यते सोऽसंप्रज्ञात इत्यर्थः॥ १८॥

सोऽयमसंप्रज्ञातो द्विविधो भवप्रत्यय उपायप्रत्ययश्चेति। तत्राद्यो मोक्ष्यमाणैर्हेयः। तमाह—

**भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥**

भवन्त्यस्मिञ्जन्तव इति भवः संसारोऽविद्याख्यः, स प्रत्ययो हेतुर्यस्य स संसारमूलोऽसंप्रज्ञातः । स च भूतेन्द्रियेष्वात्मत्वभावनया विधूतदेहानां विदेहानाम् अव्यक्तमहदहंकारपञ्चतन्मात्रेषु प्रकृतिष्वात्मत्वभावनया लीनानां प्रकृतिलयानां भवत्यन्तवत्फलः । तदीयं चित्तं विवेकख्यात्यभावात्सुप्तचित्तवल्लीनमप्युत्थाय संसारे पततीति भावः ॥

अथ मुमुक्षुभिरुपादेयमुपायप्रत्ययमाह—

**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥**

ममायं योग एव परपुरुषार्थसाधनमिति प्रत्ययः श्रद्धा । सा चोत्कर्षश्रवणेनोपजायते । उत्कर्षश्च स्मर्यते— ‘तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन’ इति । तस्यां च श्रद्धायामवसितायां वीर्यमुत्साहो भवति ‘सर्वथा योगं संपादयिष्यामि’ इति । एतादृशोत्साहेन तदा तदानुष्ठेयानि योगाङ्गानि स्मर्यन्ते । तया च स्मृत्या सम्यगनुष्ठितसमाधेरध्यात्मप्रसादे सति, ऋतंभरा प्रज्ञोदेति । तत्पू-

वेकस्तत्प्रज्ञापूर्वकोऽसंप्रज्ञातसमाधिः इतरेषां विदेहप्रकृतिलयेभ्योऽर्वाचीनानां योगिनां सिध्यतीत्यर्थः ॥ २० ॥

इत्थं परवैराग्यसाध्यं समाधिं विधाय तस्य तारतम्येन समाधेः शैघ्र्यतारतम्यमाह—

**तीव्रसंवेगानामासन्नः ॥ २१ ॥**

संवेगो वैराग्यम् । तद्भेदाद्योगिनस्त्रिविधा मृदुसंवेगा मध्यसंवेगास्तीव्रसंवेगाश्चेति । तत्र तीव्रसंवेगानामासन्नः समाधिलाभः । अल्पेनैव कालेन समाधिर्लभ्यत इत्यर्थः ॥ २१ ॥

तीव्रसंवेगेष्वेव तारतम्यमाह—

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥**

मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्रश्च । तेष्वप्युत्तरोत्तरस्य त्वरया सिद्धिर्द्रष्टव्या । तदेवमधिमात्रतीव्रस्य दृढभूमावसंप्रज्ञातसमाधौ लब्धे सति, पुनर्व्युत्थातुमशक्तं सन्मनो नश्यति । ततः प्रत्यक्चितिः स्वे महिम्नि निर्विघ्नं निरन्तरमवतिष्ठत इत्यर्थः ॥ २२ ॥

अथासन्नतमसमाधिलाभ उपायान्तरमुपदर्शयति—

## ईश्वरप्रणिधानाद्वा ॥ २३ ॥

ईश्वरो वक्ष्यमाणलक्षणः । तस्मिन्परमगुरौ प्रणिधानं भावनाविशेषः । तस्मादासन्नतमः समाधिलाभः । ईश्वरो हि समाराधनादिना साधनेन आराधितः 'इदमस्येष्टमस्तु' इति संसाराङ्गारे तप्यमानं पुरुषमनुगृह्णातीति भावः । ननु पुष्करपलाशवन्निर्लेपस्य पुरुषस्य तप्यभावः कथमुपपद्यते येन परमेश्वरोऽनुग्राहकतया कक्षीक्रियेतेति चेत्, उच्यते—तापकस्य रजसः सत्त्वमेव तप्यम् । बुद्ध्यात्मना परिणते सत्त्वे तप्यमाने तदारोहवशेन तदभेदावगाही पुरुषोऽपि तप्यत इत्युपचर्यते । तदुक्तम्—'सत्त्वं तप्यं बुद्धिभावेन वृत्तं भावा ये वा राजसास्तापकास्ते । तस्याभेदग्राहिणी तामसी या वृत्तिस्तस्यां तप्य इत्युक्त आत्मा' इति । इत्थं तप्यमानं पुरुषं परमेश्वरः स्वेच्छया निर्माणकायमधिष्ठाय लौकिकवैदिकसंप्रदायप्रद्योतकोऽनुगृह्णातीत्यनवद्यम् ॥ २३ ॥

कः पुनः स ईश्वर इत्यत्राह—

## क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुष-विशेष ईश्वरः ॥ २४ ॥

क्लिश्नन्तीति क्लेशा वक्ष्यमाणलक्षणा अविद्यादयः । कर्म

मिश्रामिश्ररूपं वक्ष्यमाणम् । विपच्यत इति विपाकः फलं जात्यायुर्भोगादिः । आशेरत इत्याशयाः संस्काराः । तैरपरामृष्टोऽसंश्लिष्टः । संश्लिष्टस्तु संसारी जीवः । मुक्तस्त्वसंश्लिष्टोऽपि पूर्वकाले तत्संश्लेषाद्बद्ध इव । अतः पुरुषविशेषो नित्यमुक्त ईश्वरः । तस्य सार्वज्ञ्यमैश्वर्यं च अनादिसिद्धप्राकृतशुद्धसत्त्वात्मकचित्तसंबन्धादिति द्रष्टव्यम् ॥ २४ ॥

अथ तत्र प्रमाणमाह—

**तत्र निरतिशयं सार्वज्ञ्यबीजम् ॥ २५ ॥**

तत्रेश्वरे निरतिशयं सर्वज्ञत्वस्य बीजं मूलम् । एतदुक्तं भवति— अस्मदादिज्ञानं निरतिशयेन ज्ञानेनाविनाभूतं सातिशयत्वात् । यत्सातिशयं तत्समानजातीयेन निरतिशयेन युक्तम्, यथा विभुपरिमाणेन कुम्भपरिमाणम् । अतः परिशेषादनुमानसिद्धनिरतिशयज्ञानवानीश्वर इति ॥ २५ ॥

नन्वयमेक एवेश्वरः किमन्येऽपि सन्ति? नेत्याह—

**पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥**

ये सर्गादावुत्पन्नाः पूर्वे ब्रह्मादयः, ते मासर्त्वयनहायनादिरूपेण कालेन परिच्छिद्यन्ते । तदुक्तम्— 'ये रम्या ये

